शकुन्तला—(आत्मगतम्।) मणोरहो क्खु मे भणिदो भअवदीए।*

मारीचः—तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः।

मारीचः—तथाप्यसौ सपुत्राया दुहितुः पत्या परिग्रहप्रियमस्माभिः श्रावयितव्यः। कः कोऽत्र भोः।

(प्रविश्य।)

शिष्यः—भगवन्! अयमस्मि।

मारीचः—गालव! इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति।

शिष्यः—यदाज्ञापयति भगवान्। (इति निष्क्रान्तः।)

मारीचः—वत्स! त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व।

राजा—(सप्रणामम्।) यदाज्ञापयति भगवान्।

मारीचः—सम्प्रति हि—

तव भवतु विडोजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।
युगशतपरिवृत्तैरेवमन्योऽन्यकृत्यै—
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥३४॥

---

* मनोरथः खलु मे भणितो भगवत्या।

---

अत्र भाविवसुधाजयस्य प्रत्यक्ष इवोपस्थितत्वाद् भाविकालङ्कारः, एवम् अनुद्धातस्तिमितेत्यत्र च पदार्थहेतुककाव्यलिङ्गञ्च। शिखरिणी वृत्तम्।

(३४) तवेति।—विडोजा इन्द्रः, तव प्रजासु प्राज्या प्रचुरा वृष्टिर्यस्मात्तादृशः भवतु। सम्यग् जलदानेनानुगृह्णातु प्रजा इति भावः। त्वमपि भवानपि, विततो विस्तृतो यज्ञो यागो येन तादृशः सन्, वज्रिणमिन्द्रं, अलमत्यर्थं प्रीणय तोषयेत्यर्थः, युगशतं व्याप्य परिवृत्तैर्जातविनिमयैः, एवमुक्तप्रकारैः, उभयोर्लोकयोः द्यावापृथिवीलक्षणयोः श्लाघनीयैः प्रशंसितुं योग्यैः, अन्योन्यकृत्यैः परस्परकृत्यैः जयतं सर्वोत्कर्षेण वर्त्तेथां, त्वमिन्द्रश्चेति शेषः। अत्र परिवृत्तिरलङ्कारः। मालिनीवृत्तम्।

मारीचः—वत्स ! किं ते भूयः प्रियमुपकरोमि ।

राजा—अतः परमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तुमिच्छति तर्हीदमस्तु । ( भरतवाक्यम् । )

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती न हीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥३५॥

( इति निष्क्रान्ताः सर्वे । )

सप्तमोऽङ्कः ।

समाप्तमिदमभिज्ञानशाकुन्तलं नाम नाटकम् ॥

---

(३५) प्रवर्ततामिति–पार्थिवो नृपतिः, प्रकृतीनां प्रजानां हिताय हितकरणाय प्रवर्ततां प्रवृत्तो भवतु । श्रुतिभिर्वेदैः, महती महनीया सरस्वती वाग्देवी, न हीयतां न त्यज्यतां जनैरिति शेषः । अनवरतं सरस्वती सेव्यतामिति भावः । परिगता व्याप्ता शक्तिर्महिमा यस्य तादृशः, आत्मनः स्वयं भवतीत्यात्मभूः जन्मरहित इति भावः, नीललोहितो गले कालकूटसद्भावान्नीलः, ललाटे चाग्निनयनत्वाल्लोहितः एतादृशः शिवः ममापि पुनर्भवं पुनर्जन्म क्षपयतु विनाशयतु । भवबन्धनान्मां विमोच्य रक्षत्वित्यर्थः । रुचिरा वृत्तम् ।

इत्यभिज्ञानशाकुन्तले सुबोधिन्याख्यायां व्याख्यायां सप्तमोऽङ्कः ।

## हमारी प्रकाशित पुस्तकें

१ रामायण महाभारत [काशीकी प्र० प० में स्वीकृत अंश] सुबोधिनीसहित ।।=)
२ रघुवंश प्रथम सर्ग सुबोधिनी टीका सहित ।।।)
३ रघुवंश पञ्चम सर्ग ,, ,, ।।)
४ रघुवंश १-२ सर्ग ,, ,, १।।)
५ रघुवंश २-३ सर्ग मल्लिनाथी, हिन्दी बिहार परीक्षोपयोगी ।।।)
६ रघुवंश २-४ सर्ग ,, ,, काशी प्रथमा परीक्षोपयोगी १)
७ रघुवंश ६-१० सर्ग सुबोधिनी २।।)
८ रघुवंश ६-१० सर्ग केवल मल्लिनाथी टीका १)
९ रघुवंश १-३ सर्ग केवल मल्लिनाथी टीका ।।)
१० श्रुतबोध [ प्राचीन संस्करण ] सुबोधिनी टीका सहित सोदाहरण ।।)
११ श्रुतबोध [ बालोपयोगी संस्करण, काशी की प्रथमा में स्वीकृत ] ।।)
१२ किरातार्जुनीय [ १-२ सर्ग ] सुबोधिनी टीका सहित १)
१३ किरातार्जुनीय [ सम्पूर्ण ] मल्लिनाथी सहित २।।)
१४ शिशुपालवध १-२ सर्ग सुबोधिनी टीका १।)
१५ नैषध महाकाव्य [ १-९ सर्ग ] मल्लिनाथी टीका ४)
१६ अभिज्ञानशाकुन्तल संस्कृत टीका तथा हिन्दी टीका सहित ३।।)
१७ वेणीसंहार—सरल संस्कृत टीका तथा हिन्दी में सरलार्थ [ यन्त्रस्थ ] २।।)
१८ अलंकार सर्वस्व [ राजानक रुय्यककृत ] २)
१९ मीमांसा परिभाषा संस्कृत हिन्दी टीका सहित ।।।)
२० नीति संग्रह [ संक्षिप्त हितोपदेश ] ।।) २१ छन्दःसंग्रह ≥)
२२ पाणिनीय प्रबोध [ काशी की प्रथमा में स्वीकृत ] २)
२३ महाकवि भारवि ।।) २४ महाकवि माघ ।।)
२५ मित्रसम्प्राप्ति [पञ्चतन्त्र हिन्दी टीका सहित] ।।।) २६ पञ्चतन्त्र प्रथमतन्त्र १)
२७ पञ्चतन्त्र पञ्चमतन्त्र ।) २८ रामनामलेखनविधि भा० टी० ≥)
२९ विदुरनीति १-२ अध्याय हिन्दी टीका सहित ।।=)
३० विदुरनीति ३-८ अध्याय हिन्दी टीका सहित ।।)
३१ अमरकोष प्रथमकाण्ड, काशीकी प्रथमामें स्वीकृत [हिन्दी टीका सहित] ।-)
३२ चन्द्रालोक, काशी की पूर्व मध्यमा में स्वीकृत [ श्री गौरीनाथ पाठक कृत संस्कृत तथा हिन्दी टीका सहित ] १)

सर्वविध संस्कृत पुस्तकों के मिलने का एकमात्र स्थान—

मैनेजर, शारदा-भवन,

४४, अगस्त्यकुण्ड, बनारस।

